भवति। अस्य चाभावस्य नाशोऽप्यनपेक्ष्यः—असाध्यः; स्वयमसत्त्वात्, न ह्यसतः पुनरसत्त्वमपेक्ष्यते। तस्मादकार्यत्वादनाश्यत्वाच्च प्रागभावादि नित्यमेव। एवं चाभावस्य नित्यत्वे विश्वस्य स्वाभावग्रस्तत्वाद् विश्वमपि जगन्निःस्वभावमेव स्यात्; ततश्च शून्यमेव विश्वमिति। तन्निराकरोति—**मैवमिति**। तत्र हेतुमाह—**भावान्तरात्मनीति** [!] भावान्तरात्मनि, अधिकवपुषि वा अधिकरूपे वाऽभावे तत्स्वभावस्य प्रामाणिकत्वात् कार्यकारणभावादिसर्वस्वभावनियमेन भवदुक्तदोषशङ्काऽपि नाङ्कुरतीति भावः॥ १३२॥ **इति अभावस्य निःस्वभावत्वभङ्गः**॥

**493.** **एतावन्तः पदार्था न तु पर इति तत्सिद्ध्यसिद्ध्योरयुक्तं**
**मैवं योऽस्त्येष सिद्धान्न पर इति वचस्येष दोषो न तु स्यात्।**
**सत्येव स्यात्तवापि ह्यधिकमनधिकं वेति शङ्कावकाशो**
**नैवं चेन्नैव शङ्का न च परिहरणं भित्तिलाभे हि चित्रम्॥ १३३॥**

एवमर्थतत्त्वं सर्वमुपपाद्य पदार्थेयत्तावचनं न युज्यत इति वदतः परवादिनो मतं दूषणायानुवदति—**एतावन्त** इति॥ एतावन्त एव पदार्था न पर इति परेषां सिद्धावसिद्धौ च न युक्तम्; सिद्धौ तावद्व्याघातादेव न युक्तम्; सिद्धस्य निषेद्धुमशक्यत्वात्। असिद्धौ च प्रतियोग्यभावान्न युक्तमिति भावः। अनूदितमेतन्निराकरोति—**मैवमिति**। निराकरणप्रकारं विवृणोति—**य** इति। यः प्रमाणेन लोके सिध्यति स एतस्मान्न पर इति सामान्यतः प्रमाणसिद्धे वस्तुनि भेदे निषिध्यमाने सति तन्निषेधकवचस्येष भवदुक्तो दोषो न स्यात्। अयमर्थः—सामान्यतः प्रतिपन्ने वस्तुनि प्राङ्निरूपितादर्थादर्थान्तरत्वं प्रतिषिध्यत इति। एवमनङ्गीकारे तवापि ह्यधिकशङ्काया नावकाश इत्याह—**सत्येवेति**। प्रतिपन्ने वस्तुनि खलु भवताऽपि पूर्वोक्तादधिकमनधिकं वेति शङ्काऽपि कर्तुं शक्यते। नैवं चेत् एवमनङ्गीकारे नैव शङ्का—भवताऽधिकत्वं नाशङ्क्यते। न च परिहरणं—नास्माभिराशङ्कितोऽर्थः परिह्रियते। तत्र दृष्टान्तमाह—**भित्तिलाभ** इति। अयमर्थः—शङ्कायां सत्यामेवोत्तरं दातुमुचितमिति। अत्रेदं तात्पर्यम्—अधिकमर्थं केनाप्यवगम्याधिकत्वमाशङ्कनीयम्। भवता आशङ्कितं चेत्तत्रोत्तरं दास्यामः; नाशङ्कितं चेदस्माभिरपि सुखेनास्थीयत इति॥ १३३॥ **इति पदार्थेयत्तावधारणोपपत्तिः**॥

**494.** **इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं**
**विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च।**
**यन्नास्मिन् क्वापि नैतत् क्षममिह कुहकैरिन्द्रजालं न तैस्तै-**
**रेकं तत्सर्वसिद्ध्यै कलयत हृदये तत्त्वमुक्ताकलापम्॥ १३४॥**

इत्थं निर्मितस्य प्रबन्धस्य वक्तृवैलक्षण्यं, संप्रदायवैलक्षण्यं विषयवैलक्षण्यं च तावदाह—**इत्थमिति**॥ श्रीवेङ्कटेश इति वक्तृवैलक्षण्यम्। श्रुतममतेति सत्संप्रदायसिद्धत्वम्। जगन्मूलकन्दं मुकुन्दमिति विषयवैलक्षण्यम्। एतदभिधानं प्रबन्धस्योपादेयतमत्वप्रतिष्ठापनाय। यस्य भगवतो विस्तारोऽपि विश्वं विस्तरो वाङ्मयं चेति सर्वमपि वक्तव्यं संगृहीतमिति द्योतयति। तदेव वदति—**यन्नास्मिन् क्वापि नैत**दिति। अनेन *यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदिति वचनं स्मारयति। इह—अस्मिन् प्रबन्धे। तैस्तैः कुहकैर्वादिभिरिन्द्रजालं न क्षममिति प्रबन्धस्याधृष्यत्वमाह। इत्थंभूतं तत्त्वमुक्ताकलापं मङ्गलतमत्वात् हृदये कलयतेति शिष्याणां पुरुषार्थसाधनोपदेशः॥ १३४॥

495· निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे
यत्रोदासि द्विधा वा समगणि गहने सम्मते सन्मतीनाम् ।
निष्कष्टुं कश्चिदन्यः प्रभुरिह भगवल्लक्ष्मणाचार्यमुद्रा-
मक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥ १३५ ॥

**निःशेषामिति** ॥ अस्मिन् प्रबन्धे निश्शेषां वस्तुवृत्तिं निपुणं न्यस्यता—स्थापयता मया क्वापि कोणे—आभासेऽर्थे यत्रोदासि, गहनेऽर्थे यत्र द्विधा वा समगणि—विकल्पेनाभाणि; तत्र च सन्मतीनां—विदुषां संमत एव, न पुनः स्वकपोलकल्पित [त्व] मात्रेण । तत्र भगवल्लक्ष्मणाचार्यमुद्रां निष्कष्टुमक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्मत्तोऽन्यः कश्चिन्न प्रभुरित्यन्वयः । अनेन मदुक्तानुसारेणैवान्तेवासिभिरवशिष्टं निष्कष्टव्यं न पुनस्तद्विरोधेनेति भावः ॥ १३५ ॥

496· दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुरोधा-
च्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धै-
स्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥ १३६ ॥

**दृष्ट इति** ॥ एतस्य सिद्धान्तस्य दृष्टेऽपह्नुत्यभावात्, प्रत्यक्षसिद्धेऽर्थे मृषावादिप्रभृतिवदपह्नवाभावात्, अनुमितिविषये लाघवस्यानुरोधात्, वैशेषिकादिवदनपेक्षितकल्पनाभावात्, शास्त्रेणैवावसेये प्रमाणबाधविरहिते नास्तिकत्वप्रहाणात्—निरीश्वरमीमांसकवदीश्वरापह्नवप्रभृत्यनर्थकार्थप्रहाणात् । नाथोपज्ञं प्रवृत्तं—**नाथमुनि**मारभ्य **प्रवृ**त्तम् । बहुभिर्यामुनेयप्रबन्धैरुपचितम् । **यतीन्द्रै**स्सम्यगेव भाष्यादिप्रबन्धपञ्चकनिर्माणेन परित्रातमिदमेव दर्शनमखिलतमःकर्शनमिति स्वदर्शनस्य सूर्योदयवदशेषार्थप्रकाशकत्वं दर्शयति—**दृष्ट** इत्यादिना ॥ १३६ ॥

497· हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-
क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।
दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त-
त्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥ १३७ ॥

एतद्दर्शनप्रवर्तकाचार्यप्रशंसया स्वभक्तिमेवोत्तम्भयन् परपक्षप्रवर्तकानां परागपटलवदाभासत्वमेवाह—**हृद्येति** ॥ अक्षरार्थो व्यक्तः ॥ १३७ ॥

498· अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोह-
स्तच्चोदर्का न तर्कास्तदिह जगति किं मेधया साधयामः ।
तिष्ठत्वेतल्लघिष्ठाः कतिचन दधतो मानसे मानसेतुं
हंहो सभ्यानसभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति ॥ १३८ ॥

**अध्यक्षमिति** ॥ इत्थं सर्वोत्तरे दर्शने विद्यमानेऽप्याभासवादिनः प्रत्यक्षागमप्रमितयोरर्थयोर्लघुत्वमेव प्रतिपद्यन्ते । **अयमादिमो वादिमोहः**; प्रत्यक्षागमयोरेव प्राबल्यात्, तद्विरुद्धस्य चानुमानस्यात्यन्तदौर्बल्यात् । यदि वा तर्कमेव परि-

शोधयामः—न तत्त्वोदर्कास्तर्काः—केवलं दन्तादन्तिप्रयासमात्रशेषाः; तर्काणामप्रतिष्ठितत्वात्। अत्र तर्कशब्दोऽनुमानं तदनुग्राहकं तर्कमपि संगृह्णाति। एवंभूते जगति किं मेधया साधयाम इति निर्वेदवचनम्; अथवाऽधिक्षेपवादः। इममेवाधिक्षेपवादमुत्तरोत्तरमुद्दीपयति—**तिष्ठत्वेतत्**दिति। लघिष्ठाः कतिचन मानसे—मनसि अभिमानस्य सेतुं—परां काष्ठां वहन्तो दुर्जनाः स्वयमसभ्यस्थपुटमुखपुटास्सभ्यान्निर्जयन्ति। किमुक्तं भवति—स्वयं भषणमात्रेणैव भाषमाणा इव जल्पन्तीत्यर्थः। हंहो इति विषादपूर्वाधिक्षेपे ॥ १३८ ॥इति **वक्तृवैलक्षण्यादिनिरूपणम्** ॥

499. स्यादित्थं शिक्षितार्थो य इह यतिपतिच्छात्रहस्ताग्रनृत्य-
आराचन्यासरेखासहचरितमतिस्सर्वतन्त्रस्वतन्त्रः।
शुष्कोपन्यासशिक्षापटिमकटुरट[द्भाण्ड]द्वैरिविद्वत्करोटी-
कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १३९ ॥

इत्थमनेन प्रबन्धेन शिक्षितार्थस्सर्वेष्वपि तन्त्रेषु स्वातन्त्र्यं तन्त्रयन् प्रतिभटविद्वत्करोटीकुट्टाकक्रीडाक्षममष्टापदकटकं वामपादे बिभर्त्विति प्रकृतस्य प्रबन्धस्य वैतण्डिकविजयहेतुत्वेनातिशयमाह—**स्यादित्थमिति** ॥ पदार्थः स्पष्टः॥ १३९ ॥ इति **एतत्प्रबन्धाध्ययनफलनिरूपणम्** ॥

500. गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद् दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ १४० ॥

सर्वमङ्गलसिद्ध्यर्थं प्रबन्धसमाप्तौ सकलाचार्यदेशिकं श्रीमद्रामानुजाचार्यं प्रतिभटसकलसिद्धान्तध्वान्तनिरासकं प्रस्तौति, स्तौति च—**गाथेति** ॥ १४० ॥ इति **आचार्यस्तुतिः** ॥

**॥ इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे [illegible] पञ्चमः ॥**

**॥ समाप्तश्चायं निबन्धः ॥**

श्रीमद्वेदान्तदेशिकग्रन्थमालायां

## ॥ वेदान्तविभागः समाप्तः ॥

## Patrons. Rs 100.

1. **Sri M. Sudarsanam Iyengar & Sons**
Timber Merchants, MADRAS.
2. **Sri S. Varadacharyaswami,**
Federal Court Judge, Delhi.
3. **Sri A. V. Gopalacharyaswami** M. A., B. L.,
Advocate, TRICHINOPOLY.
4. **Mahamahopadhyaya, R. V. Krishnamacharya,**
KUMBAKONAM.
5. **R. Srinivasacharyar,** B. A., B. L.,
Judge Chief Court PUDUKOTAH.
6. **Sri Ubhayavedanta Pravarthana Sabha,**
Malleswaram, BANGALORE.
7. **V. S. Sundaram Iyengar,**
Accountant General, Seethavilas Mylapore.
8. **S. Venkataranga Iyengarswami,**
Mysore High Court Judge, BANGALORE.
9. Rajalakshminivas Ramalal
Ganedivala Hyderabad (Dn.,)

## Donors. Rs 50

1. **Sri K. Raghavacharyar,**
Ketired Postal Inspeciore, MAD
2. **T. S. Ramaswami Iyengar,**
Advocate Mudari
3. Dewan Bahadur. **C. V. Venkataramana I**
COIMBATO
4. Mahant Govinda Dhwajachar
5. Vedanta siramani Ramanuja
Swrmi, BRINDA
6. S. Raghava Iyengar swami,
Rtd., Dt., Judge, Srir
7. H. Rangacharya,
Dt. Traffic Superintendent
Malleswaram, Ban
8. S. Narayana Iyengar swa
Rd. Dy Supt. of Police, Srir

## SRI BHAGAVATH RAMANUJA GRANTHAMAL

All the works of Sri Ramanuja have been printed in a similar manner, in characters, udder the title of "Sri Bhagavad Ramanuja Granthamala." Price Rs

——:(O):——

All communications to be addressed to

VIDWAN A. SAMPATHKUMARACHAR, M. A.
*Granthamala Office, 39, Sannidhi Stre*
*L. CONJEEVERAM, S.*

Cover Page, Printed at Sri Sudarsana Press, L. Conjeeveram.